॥ श्रीरस्तु ॥

# ॥ विक्रमार्कचरित्रम् ॥





...पुर्याम्
वाविळ्ल रामस्वामिशास्त्रुलु अण्ड् सन्स्
इत्येतैः प्रकाशितम्



*Price 1-0-0*

## ॥ काव्यग्रन्थाः ॥

॥ विक्रमार्कचरितम् ॥





चेन्नपुर्याम्

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितम्

१९४४



॥ श्रीरस्तु ॥

# ॥ विक्रमार्कचरित्रम् ॥

श्रीपुराणपुरुषं पुरान्तकं पद्मसम्भवमुमासुतं मया ।
सम्प्रणम्य च सुरान् सरस्वतीं विक्रमार्कचरितं विरच्यते ॥

अस्ति किल मालवेषु समस्तवस्तुसम्पूर्णा स्वगुणपराभूतपुरन्दरपुरविभूतिरुज्जयिनी नाम नगरी । तत्र समस्तसामन्तसीमन्तिनीसीमन्तसिन्दूरारुणचरणकमलयुगलो भर्तृहरिर्नाम राजाऽऽसीत् । स च सकलकलाप्रवीणः समस्तशास्त्राभिज्ञश्च । तस्य च राज्ञः स्वविक्रमापहृतवैरिविक्रमो विक्रमो नामानुजोऽभूत् । तत्र च नगरे सकलशास्त्राभिज्ञः समस्तमन्त्रशास्त्रप्रवीणो ब्राह्मणः कश्चिदजायत । स केवलं दरिद्रः । स चैकदा मन्त्रानुष्ठानेन भुवनेश्वरीमतोषयत् । सा तु सन्तुष्टा ब्राह्मणमाह—"भो ब्राह्मण ! फलमेतद्भक्षय । अनेन जरामरणवर्जितो भविष्यसि ।" ब्राह्मणस्तत्फलं गृहीत्वा स्वभवनं प्रत्यागत्य स्नात्वा देवार्चनां विधाय, यावत्फलं भक्षयितुमयतिष्ट, तावदस्य मनस्येवं बुद्धिरभूत्—अहं तावद्दरिद्रः । जरामरणवर्जितो भूत्वा कस्योपकारं करिष्यामि । वहुकालजीविनोऽपि मम भिक्षाटनेनैवं जीवनं कार्यम् । [परोपकारिणस्तु पुरुषस्य स्वल्पकालजीवनमपि श्रेयो भवति । अन्यच्च, ज्ञानशौर्यादिगुणोपलक्षितः क्षणमात्रमपि यो जीवति तस्यैव जीवितं सफलम् ] । तथा चोक्तम्—

यज्जीवति क्षणमपि प्रथितैर्मनुष्यो
विज्ञानशौर्यविभवादिगुणैः समेतः ।
तत्तस्य जीवितफलं प्रवदन्ति सन्तः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥
यस्मिन् जीवति जीवन्ति बहवः स तु जीवतु ।
बकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥

किञ्च—

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारपूर्णादराः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुष्पूरोदरपूरणाय पिबति स्रोतः पतिं वाडवो
जीमूतस्तु निदाघसम्भृतजगत्सन्तापविच्छित्तये ॥
असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः ।
यदृच्छाशब्दवत् पुंसः संज्ञायै जन्म केवलम् ॥

एवमादि विचार्य, 'एतत्फलं राज्ञे दद्याम् । स जरामरणवर्जितो भूत्वा चातुर्वर्ण्यं धर्मतः सविशेषं पालयेत् ।' इति निश्चित्य तत्फलं गृहीत्वा राजसमीपमागत्य ॥

अहीनमालिकां बिभ्रत्तथा पीताम्बरं वपुः ।
हरो हरिश्च भूपाल ! करोतु तव मङ्गळम् ॥

इत्याशिषं प्रयुज्य फलं दत्त्वा भणति स्म—'भो राजन् देवतावरप्रसादलब्धमिदमपूर्वं फलं भक्षय। अनेन त्वं जरामरणवर्जितो भविष्यसि'। राजा तु तत्फलं गृहीत्वा ब्राह्मणं सम्मान्य प्रेष्य विचारयति स्म—'अहो ! ममैतत्फलभक्षणादमरत्वं भवि

यति । मम त्वनङ्गसेनायां महती प्रीतिरस्ति । सा मयि
जीवति म्रियेत चेत् तस्या वियोगदुःखं सोढुं न शक्नोमि ।
तस्मादिदं फलं मम प्राणप्रियायायनङ्गसेनायै दास्यामी'ति ।
अनन्तरं राजा तामाहूय तस्यै तत्फलं ददौ । तस्या मन्दुरिकः
कश्चित् प्रियतमः । सा पुनर्विचार्य तस्मै तत्फलं ददौ । तस्य
काचिद्दासी प्रियतमा । स तस्यै प्रादात् । तस्याः कश्चिद्गोपालः
प्रियः । सा तस्मै प्रादात् । तस्य कस्याञ्चिद्गोमयधारिण्यां महत्प्रे-
माभूत् । सोऽपि तस्यै प्रायच्छत् । ततः सा गोमयधारिणी
ग्रामाद्बहिर्गोमयं हृत्वा तद्भाजनं शिरसि निधाय तदुपरि तत्फलं
निक्षिप्य यावत् राजवीथ्यामाजगाम तावद्राजा भर्तृहरी
राजकुमारैः सह बहिर्गच्छन् तस्याः शिरस्स्थापितगोमयाग्र-
स्थितं फलं दृष्ट्वा गृहमागत्य ब्राह्मणमाहूयावदत्—'भो ब्राह्मण !
त्वया यत्फलं दत्तं तादृशमन्यत् किमस्ति ?' ब्राह्मणः—"भो
राजन् ! तत्फलं देवतावरप्रसादलब्धम् । तादृशं फलं भूलोके
नास्ति । सत्यमेतत् । राजा नाम साक्षादीश्वरः । तस्य पुरतोऽनृतं
न वाच्यम् । स देववन्निरीक्षणीयः । तथा चोक्तम्—

सर्वदेवमयो राजा ऋषिभिः परिकीर्तितः ।
तस्मात्तं देववत्पश्येन्न व्यलीकं वदेत्सुधीः ॥ ७

राजा—'तादृशं फलमिदानीमेव दृष्टं राजवीथ्याम् ।'
ब्राह्मणः—'मया दत्तं फलं भक्षितं वा न वा ?' राजा—
'नाहमभक्षयम् । किंतु मम प्राणप्रियायायनङ्गसेनायै प्रादाम् ।'
ब्राह्मणः—'तर्हि तां पृच्छ । राजा तामाहूय सशपथमपृच्छत् ।

अनङ्गसेना 'मया तत्फलं मन्दुरिकाय दत्त' मिति वभाण तथ
सत्वाकारितो दास्यै दत्तमित्यकथयत् । दासी गोपालायेति
गोपालो गोमयधारिण्यामित्यवादीत् । ततो जातसम्प्रत्ययं
राजा विषादं परमं गत्वा ससम्भ्रमं गोमयधारिणीमाकार्य
तत्फलं गृहीत्वा कतिचिच्छ्लोकानपाठीत्—

रूपे मनोहारिणि यौवने च वृथैव पुंसामभिमानबुद्धिः ।
नतभ्रुवां चेतसि चित्तजन्मा कर्तुं यदेवेच्छति तत्करोति ॥

अहो! स्त्रीणां चित्तं चरित्रञ्च केनापि ज्ञातुं न शक्यते
तदुक्तम्—

अश्वप्लुतं वासवगर्जनं च स्त्रीणां च चित्तं पुरुषस्य भाग्यम् ।
अवर्षणं चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्यः ।

तथा च—

गृह्णन्ति विपिने व्याघ्रं विहङ्गं गगने स्थितम् ।
सरिन्मध्यगतं मीनं न स्त्रीणां चपलं मनः ॥ १०

किञ्च—

हीनभाग्यस्य राज्यश्रीः पुष्पश्रीर्गगनस्य वा ।
भवेदेव न तु स्त्रीणां मनश्शुद्धिर्मनागपि ॥ ११

अपिच—

सुखदुःखजयपराजयजीवितमरणानि ये विजानन्ति ।
मुह्यन्ति ते हि नूनं तत्त्वविदश्चापि चेष्टितैः स्त्रीणाम् ॥

अन्यच्च—

स्मरोपममपि प्राप्य वाञ्छन्ति पुरुषान्तरम् ।
नार्यस्सर्वास्स्वभावेन नोच्यन्ते ह्यमलाशयाः ॥ १३

तथाच—

विना यन्त्रेण मन्त्रेण तन्त्रेण विनयेन च ।
वञ्चयन्ति नरं नार्यः प्रज्ञाधनमपि क्षणात् ॥ १४

कुलजातिपरिभ्रष्टं निकृष्टं दुष्टचेष्टितम् ।
अस्पृश्यमधमं प्रायो मन्ये स्त्रीणां प्रियं वरम् ॥ १५

गौरवेषु प्रतिष्ठासु गुणेष्वाराध्यकोटिषु ।
धृता अपि निमज्जन्ति दोषपङ्के स्वयं स्त्रियः ॥ १६

एता हसन्ति च रुदन्ति च कार्यहेतो-
र्विश्वासयन्ति च नरं न तु विश्वसन्ति ।
तस्मान्नरेण कुलशीलवता सदैव
नार्यः श्मशानसुमना इव वर्जनीयाः ॥ १७

अन्यच्च—

न वैराग्यात्परं भाग्यं न बोधादपरः सखा ।
न हरेरपरस्त्राता न संसारात्परो रिपुः ॥ १८

इत्येवं पठित्वा परं विरक्तो भर्तृहरिर्विक्रमार्कं राज्येऽभिषिच्य तत्फलं तस्मै दत्वा स्वयं वनं जगाम । ततः प्राप्तराज्यो विक्रमः सकलामपि वसुन्धरां न्यायेन पर्यपालयत् ।

तत एकदा दिगम्बरः कश्चिद्राजसमीपमागत्य—

लीलया मण्डलीकृत्य भुजङ्गान्धारयन् हरः ।
दद्याद्देवो वराहश्च तुभ्यमभ्यधिकां श्रियम् ॥ १९

इत्याशिषमुक्त्वा राजहस्ते फलं दत्त्वाऽब्रवीत्—'भो राजन् ! अहं कृष्णचतुर्दश्यां महाश्मशाने अघोरमन्त्रेण हवनं

करिष्यामि। तत्त्वयोत्तरसाधकेन भवितव्यम्।' राजा तथेति प्रतिज्ञाय तेन सह पितृवनं प्राविशत्। तत्र दिगम्बरं नृपं हन्तुमारभ्य तेन स्वयमेव हतः। तेन प्रसङ्गेन तस्य राज्ञे बेताळो वशंवदो बभूव। अष्ट महासिद्धयश्च प्राप्ताः। ततस्त्रि भुवनेऽस्य कीर्तिरनर्गळा गङ्गेव बभूव।

तत्रान्तरे रम्भोर्वश्योर्नर्तननैपुण्यां विवादस्समजायत तयोरन्तरमवगन्तुममरेषु कोऽपि न शशाक। एकदा सिंहास-नासीनं देवं वासवं नारदो बभाण—'देव! धरातले विक्रमो नाम राजा जागर्ति। स सकलकलाभिज्ञो विशेषतः सङ्गीत-विद्याविचक्षणः। स एवैतयोर्विवादनिर्णयं कर्तुं प्रभवेत्।' तच्छ्रुत्वा महेन्द्रो विक्रममानेतुं मातलिं प्रेषयामास। विक्र-मोऽपि मातलिसमानीतं रथमारुह्य सहैव बेताळेन सुधर्मां प्रविश्य वासवेन सम्मानितः समुचितमासनमध्यास्त। तदानीं रम्भोर्वश्योर्नृत्तं प्रावर्तत। राजा तूर्वशीं प्रशशंस। नृत्तशास्त्र रहस्यान्युपन्यस्य जयमुर्वश्यै प्रादाच्च। पाकशासनस्तु परं सन्तुष्य मणिमयमतिमनोहरं सिंहासनमेकमस्मै प्रादात्। तस्मिन् सिंहासने द्वात्रिंशत् सालभञ्जिकाः सन्ति। तासां शिरसि पदं निधाय तदध्यासितव्यम्। राजापि महेन्द्रमापृच्छ्य तदासनं गृहीत्वा निजपुरमगमत्। तदनन्तरमेकदा शुभे मुहूर्ते विक्र-मार्को ब्राह्मणाशीर्वादपूर्वकं तत्सिंहासनमारुह्य राज्यमकरोत्। एवं महान् कालो गतः।

तत एकदा प्रतिष्ठाननगरे कस्याञ्चित् कन्यकायां शालिवाहनो नाम समजायत। तत्रान्तरे तूज्जयिनीं परितो

भूकम्पधूमकेतुदिग्दाहादीनि दुर्निमित्तानि दृष्टानि। ततो विक्रमादित्यो दैवज्ञानाहूय भूकम्पादिफलं पप्रच्छ। दैवज्ञाः—"भो देव यदयं भूकम्पस्संध्याकाले जातः तत् राज्ञोऽनिष्टं सूचयति। तथा च नारदीये—

अनिष्टदः क्षितीशानां भूकम्पस्सन्ध्ययोर्द्वयोः।
राज्ञां विनाशपिशुनो धूमकेतुरुदाहृतः॥ २०

एतद्दैवज्ञवचनं श्रुत्वा राजाऽब्रवीत्—"भो दैवज्ञाः! पुरा परमेश्वरः सन्तोषितस्तपसा मां प्राह 'भो राजन्! प्रसन्नोऽस्मि। विनाऽमरत्वं वरं याचस्वे'ति। ततोऽहमवोचम् 'भो देव! सार्धद्विहायनायां कन्यायामुत्पन्नात् पुत्रान्मम मृतिर'स्त्विति। तच्छ्रुत्वा देवस्तथेत्यनुजग्राह।" इति राज्ञो वचनं श्रुत्वा 'तर्हि तादृशः पुत्रो भविष्यतीति' दैवज्ञैरप्युक्तम्। राजाऽपि 'हा दैवसृष्टिरचिन्त्या। तादृशः कस्मिन् देशे कथमुत्पन्नो भविष्यति!' इति व्याकुलितचित्तो बेतालमाहूयैतत्सर्वं तस्मै निवेद्याब्रवीत्—'भो यक्ष! पृथिवीं परिभ्रम। एवंविधः पुत्रः कस्मिन् देशे कुत्र नगरे समुत्पन्न इति ज्ञात्वा झडिति समागच्छ' इति। बेतालोऽपि महान् प्रसाद इति निर्गत्य सागरवेलावलयितां सगिरिकाननां वसुन्धरां पर्यटन् प्रतिष्ठाननगरं प्रविश्य कुत्रापि कुम्भकारगृहे कञ्चिन्माणवकं काञ्चित्कन्यकां च क्रीडन्तौ दृष्ट्वाऽपृच्छत्—'कौ युवा'मिति। कन्या 'अयं मम पुत्र' इति प्रत्याह। बेतालः—कस्ते पिता? कन्या कञ्चन ब्राह्मणमदर्शयत्। ततो ब्राह्मणमपृच्छद्बेतालः।

ब्राह्मणः—'इयं मम कन्या । अस्याः पुत्रोऽयम् ।' तच्छ्रुत्वा विस्मयं गतो वेताळः पुनर्ब्राह्मणमवादीत्—भो ब्राह्मण! कथमेतत्? सोऽब्रवीत्—'देवानां चरित्रमगोचरम् । अस्या रूपलावण्यातिशयमोहितः शेषो नागेन्द्रोऽनया सञ्जगाम । तस्मादस्यां जातः पुत्रोऽयं शालिवाहनः ।' तच्छ्रुत्वा बेताळः सत्वरमुज्जयिनीमागत्य विक्रमादित्याय सर्वमपि वृत्तान्तमकथयत् । राजाऽपि तस्य पारितोषिकं दत्वा खड्गमादाय प्रतिष्ठाननगरं प्रविश्य यावत्खड्गं शालिवाहने चिक्षेप, तावत्तेन खड्गेन स्वयमेव क्षतः प्रतिष्ठाननगरादुज्जयिन्यां निपपात । क्षतवेदनादह्यमानशरीरोऽनन्तरमेव जीवितं विससर्ज ।

ततो मन्त्रिषु 'राजाऽयमपुत्रः, कथं कर्तव्य' मिति विचारयत्सु, भट्टिः प्राह—'विचार्यतामासां कापि गर्भिणी राजमहिषीणां स्या'दिति । ततो विचार्यमाणे काऽपि सप्तमासगर्भिणी समभूत् । तदा सर्वे मन्त्रिणो मिळित्वा गर्भस्याभिषेकं कृत्वा स्वयं राज्यं पर्यपालयन् । तदिन्द्रदत्तं सिंहासनं यदैव शून्यमासीत्, तदा मध्येसभं काप्यशरीरिणी वागासीत्—'भो मन्त्रिणः, अस्मिन् सिंहासने समुपवेष्टुं विक्रमार्कसदृशो राजा कोऽपि नास्ति । तस्मादिदं सुक्षेत्रे निक्षिप्यताम्! तच्छ्रुत्वा मन्त्रिणः कुत्रापि पवित्रे क्षेत्रे तत्सिंहासनं निक्षिप्य तत्क्षेत्रं यावनाळचणकसमृद्धं ब्राह्मणाय कस्मैचिद्ददुः । ब्राह्मणोऽपि यत्र सिंहासनं निक्षिप्तं तदुच्चस्थानमिति पक्षिणामुत्थापनार्थं तदुपरि मञ्चं निक्षिप्योपविश्य पक्षिणः समुत्थापयन्नवर्तत ॥

अथ कदाचिद्भोजराजः ससैन्यो मृगयामटन् राजकुमारैः समेतस्तत्क्षेत्रसमीपे यावदाजगाम, तावन्मञ्चोपरि स्थितो ब्राह्मणः प्राह—'भो राजन्! एतत्क्षेत्रं फलितमस्ति। ससैन्येन समागत्य भवता यथेच्छं भुज्यताम्। अश्वेभ्यश्चणकादयो दीयन्ताम्। अद्य मम जीवितं सफलमासीत्। यतो भवान् ममातिथिर्जातः। ईदृशस्त्वतिथिः कदाऽपि न संदृश्यते। तच्छ्रुत्वा राजा ससैन्यः क्षेत्रमध्यं प्रविवेश। ततो ब्राह्मणः पक्ष्युत्थापनाय मञ्चादवरुह्य क्षेत्रमध्ये प्रविष्टं राजानं दृष्ट्वा भीतोऽभणत्- "राजन्! किमेवमधर्मः क्रियते? ब्राह्मणक्षेत्रमिदं विनाश्यते। यदन्यैरधर्मः क्रियेत तद्राज्ञे निवेदनीयम्। त्वमेवान्याय्यं कर्तुं प्रवृत्तः। इदानीं को वा निवारयिष्यति। उक्तं च—

गजे कडङ्गरीये तु जारे राजनि वा पुनः।
पापकृत्सु च विद्वत्सु नियन्ता जन्तुरत्र कः॥ २१

अन्यच्च, भवान् शास्त्राभिज्ञः ब्राह्मणद्रव्यं कथं विनाशयति? ब्रह्मस्वमेव हि विषम्। तथा हि—

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्॥ २२

इति तेनोक्तं श्रुत्वा यावद्राजा क्षेत्राद्बहिः सपरिवारो निर्जगाम, तावत् पक्षिणः समुत्थाप्य पुनर्मञ्चारूढो ब्राह्मणः प्राह—'भो राजन्! किमिति गच्छसि? इदं क्षेत्रं साधु परिणतं दृश्यते। यावनाळकान् चणकांश्च भक्षयन्तु तव परिवाराः। पश्योर्वारुकफलानि च सन्ति। यथेष्टं भुज्यताम्।'

पुनर्ब्राह्मणवचनमाकर्ण्य सपरिवारो राजा यावत् क्षेत्रमध्यं प्रविवेश, तावन्मञ्चादवरुह्य स पुनस्तथैवाभणत् । ततो राजा स्वमनसि विचारयति स्म—'अहो !' ब्राह्मणो यदा मञ्चमारोहति, तदाऽस्य चेतसि दातव्यमिति बुद्धिरुत्पद्यते । यदावतरति तदा दीनबुद्धिरुत्पद्यते । अहं मञ्चमारुह्य पश्येयम् ।' इति यावन्मञ्चमारुरोह, तावद्भोजराजस्य चेतस्येवमभूत्—ननु विश्वस्यार्तिः परिहर्तव्या । सर्वस्यापि लोकस्य दारिद्र्यं निवारणीयम् । दुष्टा दण्डनीयाः । शिष्टाः परिपालनीयाः । प्रजा धर्मेण रक्षणीयाः । किं बहुना, अस्मिन् समये यदि कोऽपि मम शरीरमपि प्रार्थयिष्यते, तदपि देयमिति । ततो राजा परमानन्दपरिपूर्णः पुनरपि विचारयति स्म—एतत्क्षेत्रमाहात्म्यं स्वयमेवंविधां बुद्धिमुत्पादयति । उक्तं च—

जले तैलं खले गुह्यं पात्रे दानं मनागपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥ २३

कथमेतत्क्षेत्रमाहात्म्यं ज्ञायताम् ।' इति विचार्य ब्राह्मणमाहूयाभणत्—'भो ब्राह्मण ! तवैतत्क्षेत्रे कियान् लाभो भवति?'। ब्राह्मणः—"भो राजन् ! भवान् सकलाभिज्ञः । अविदितं तव किमपि नास्ति । यदर्हमेतत्, तदालोचयतु भवान् । अन्यच्च, राजा नाम साक्षाद्विष्णोरवतारभूतः । तस्य कटाक्षा यदुपरि निपतन्ति, तस्य दैन्यदुर्भिक्षादयो न भवन्ति । राजा नाम साक्षात् कल्पतरुः । स त्वं मम दृष्टिगोचरीभूतः । अद्य मम दारिद्र्यं सुदूरमपसृतम् । क्षेत्रं नाम कियत् ?"

ततो राजा ब्राह्मणमनेकधनधान्यादिना सम्भाव्य क्षेत्रं गृहीत्वा मञ्चस्याधश्चखान। तत्र पुरुषमात्रे गर्ते शिलैका सुमनोहराऽदृश्यत। तच्छिलाधःप्रदेशे काऽपि चन्द्रकान्तशिला दृष्टा। ततो नानाविधरत्नखचितं द्वात्रिंशत्सालभञ्जिकामिळितमतिरमणीयं सिंहासनमदृश्यत। ततो भोजः परमानन्दामृतलहरीपरिपूर्णहृदयस्सिंहासनं नगरं नेतुं यावदुच्चालयामास, तावदतिगरिष्ठमासनं नोच्चचाल। ततो राजा मन्त्रिणमवदत् !—'कुतस्सिंहासनं नोच्चलति?" मन्त्री—'भो राजन्! दिव्यमेतदासनम्। बलिपूजादिकं विना नोच्चलति, तव साध्यं च न भवति।' तस्य वचनं श्रुत्वा राजा ब्राह्मणानाकार्य तत् सर्वमपि विधानं कारितवान्। ततस्तत्सिंहासनं लघु भूत्वा स्वयमेवोच्चचाल। तदवलोक्य राजा मन्त्रिणमुवाच—"योऽनर्थं निवारयति, आगाम्यर्थं च साधयति, स एव मन्त्री। उक्तञ्च—

स्थितस्य कार्यस्य समुद्भवार्थमनर्थकार्यप्रतिघातनार्थम्।
आगामिनोऽर्थस्य च संग्रहार्थं यो मन्त्रकृत्स्यात्परमस्स मन्त्री॥

ततो मन्त्री प्रत्यब्रवीत् "मन्त्रिणा स्वामिहितमेव कर्तव्यम्। तथा चोक्तम्—

मन्त्रः कार्यानुगो येषां कार्यं स्वामिहितानुगम्।
त एव मन्त्रिणो राज्ञां न तु ये गल्लपुद्गलाः॥ २५

अन्यच्च, मन्त्रिणा विना राज्यं, धान्यं विना दुर्गं, कारुण्यं विना सौभाग्यं, ज्ञानं विना वैराग्यं, दुर्जनानां शक्तिः, पाषण्डानां मतिः, वेश्यानां विश्वासः, दैत्यानां प्रीतिः, तस्करा-

णां युक्तिः, खलानां मैत्री, पराधीनस्य स्वातन्त्र्यम्, निर्धनस्याटोपः, सेवकस्य कोपः, स्वामिनः स्नेहः, कृपणस्य गृहं, जारिण्याः पतिभक्तिः, मूर्खाणां सङ्गतिः इत्येतत् सर्वं निष्फलम् । अन्यच्च, राज्ञा महतामर्चनं कार्यं । आप्तानां बुद्धिः श्रोतव्या, देवब्राह्मणाः परिपालनीयाः । न्यायमार्गे वर्तितव्यम् । अपि च, भो राजन्! ये राजगुणाः, ते सर्वे त्वयि विद्यन्ते । अतस्त्वं सकलराजराजोत्तमः । मन्त्रिणाप्येवं गुणगरिष्ठेन भवितव्यम्—स्वामिकार्यार्थमुद्यमः, पापाद्भयं, प्रजानां हितं, परिवाराणां संयोजनं, राज्ञश्चित्तवृत्त्यनुसरणं, समयोचितपरिज्ञानं, अपायकृत्याद्राजनिवारणं, एवंविधगुणयुक्तः कुलक्रमागतः औशनस चाणक्य धौम्य शौनक वाचस्पत्यादिनीतिशास्त्राभिज्ञो मन्त्रिपदयोग्यो भवति । पुरा किल नन्दभूपालो मन्त्रिणा बहुश्रुतेन ब्रह्महत्याया निवारितः । राजा—कथमेतत्? सोऽब्रवीत्—भो राजन्! श्रूयताम्—

विशालायां नन्दो नाम राजा महाशौर्यसम्पन्नोऽभूत् । स निजबलेन प्रत्यर्थिनृपालान् स्वपादपद्मोपजीविनो विधायैकच्छत्रेण राज्यमकरोत् । तस्य च बहुश्रुतो नाम मन्त्री । भानुमती नाम महिषी । जयपालो नाम तनयः । तस्य च राज्ञस्तस्यामतिप्रीतिरासीत् । सिंहासनेऽपि सहैव तया समुपविशेत् - निमेषमपि तया विना न तिष्ठेत् । एकदा मन्त्री स्वमनस्यचिन्तयत्—अयं राजा निर्लज्जो मध्येसभं सिंहासने स्त्रियमुपवेशयति । तदा सर्वेऽपि जनास्तां पश्यन्ति । अनुचितमयं न जानाति—तथा हि—

किन्तु कुवलयनेत्रास्सन्ति नो देवलोके
त्रिदिवपतिरहल्यां तापसीं यत्सिषेवे ।
हृदयतृणकुटीरे दह्यमाने स्मराग्ना-
वुचितमनुचितं वा वेत्ति नो पण्डितोऽपि ॥ २६

अपि च यः स्त्रीणां कटाक्षैर्यावन्न भिद्यते स तावदेव प्रतिष्ठां धैर्यं च वहति । तथा चोक्तम्—

तावद्धत्ते प्रतिष्ठां शमयति च मनश्चापलं तावदार्य-
स्तावत्सिद्धान्तमात्रं स्फुरति हृदि परं सर्वलोकैकदीपः ।
कालिन्दीपूरदीव्यत्कुवलयकलिकोद्दामधामाभिरामै-
र्यावन्नो हन्यमानं कलयति हृदयं कामिनीनां कटाक्षैः ॥

अहो ! मदनस्य माहात्म्यं ! यत् कलाकोविदोऽपि विमुह्यति । उक्तं च—

विकलयति कलाकुशलं हसति शुचिं पण्डितं विदूषयति ।
अर्दयति धीरपुरुषं क्षणेन मकरध्वजो भृशं देवः ॥ २८

तथाच—

श्रुतं सत्यं तपश्शीलं विज्ञानं वित्तमुन्नतिम् ।
इन्धनीकुरुते मूढः प्रविश्य वनितानलम् ॥ २९

वृत्तं वित्तं तपः स्वान्तं स्वकुलस्यापि लाञ्छनम् ।
मरणं वा समीपस्थं कामी लोके न पश्यति ॥ ३०

इति सञ्चिन्त्यैकदाऽवसरं प्राप्य राजानमब्रवीत्—देव । विज्ञापनमस्ति । राजा—किं तत् ? मन्त्री-—"यदेषा देवी भानुमती सहोपविशति तन्महदनुचितम् । 'असूर्यम्पश्या राज-

दारा' इति हि सम्प्रदायः । अत्र नानाजनास्समागत्य तां पश्यन्ति । " राजा—'भानुमत्यनालोकनं क्षणमात्रमपि न सहे । तदुपायं निरूपय । 'मन्त्री—आलेख्यगतां तां पश्यतु देवः । तद्वचनं समुचितं मत्वा राजा चित्रकारमाहूय भानुमतीरूपं चित्रे निवेशयेत्यादिदेश । स तु तस्या रूपं साक्षादालोक्य पद्मिनीलक्षणयुक्तां तां विलिलेख । राजाऽपि तां विलिखितां प्रियां दृष्ट्वा प्रहृष्टस्तस्य पारितोषिकं ददौ ।

अनन्तरं राजगुरुः शारदानन्दश्चित्रपटे निवेशितां भानुमतीं दृष्ट्वा चित्रकारमभाणीत्—'भानुमत्याः सर्वमपि लावण्यमत्र लिखितम् । परं त्वेकं विस्मृतं त्वया । 'चित्रकारः—'भोः स्वामिन्, तत् किं कथय । ' शारदानन्दः—'तस्यां वामजघनतले तिलसदृशं लक्ष्मास्ति । तन्न लिखितम् । ' राजा तु गुरोर्वचनं श्रुत्वा तत्प्रतीत्यर्थं सुरतसमये तस्या वामजघनं यावदपश्यत् तावत् तिलसदृशोऽङ्को दृष्टः । राजा स्वमनस्यचिन्तयत्—कथमस्या गुह्यदेशे स्थितं लक्ष्म दृष्टवान् शारदानन्दः ? नूनमनया सहास्य संयोगो विद्यते । अन्यथा कथमनेन ज्ञायेत? अपि च, स्त्रीषु विषये ह्ययं सन्देहो न कार्यः । यतः—

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिन्तयन्त्यन्यं न स्त्रीणामेकतो रतिः ॥ ३१
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ३२
रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता जनः ।
इदं नारद नारीणां पातिव्रत्याय कल्पते ॥ ३३

यो मोहान्मन्यते मूढो रक्तेयं मयि कामिनी ।
स तस्या वशगो भूत्वा नृत्येत् क्रीडाशकुन्तवत् ॥ ३४
तासां वाक्यानि तथ्यानि स्वल्पानि सुगुरूण्यपि ।
करोति यः कृती लोके लघुत्वं तस्य निश्चितम् ॥ ३५
अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा ।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ ३६

इत्येवं विचार्य मन्त्रिणमाहूय पूर्ववृत्तान्तमकथयत्, मन्त्रिणापि तस्मिन् समये तच्चित्तानुकूलं भणितम्—'देव! कस्य चेतसि कीदृशमिति केन वा ज्ञा(येत)यते ? सर्वथा सत्यो भवेदयं वृत्तान्तः ।' राजा—'भो मन्त्रिन्! मम यदि प्रियोऽसि, तर्ह्यमुं शारदानन्दं मारय ।' सचिवोऽपि तथेति प्रतिज्ञाय लोकानां पुरः शारदानन्दं दृढं बबन्ध । तस्मिन् समये शारदानन्दो बभाण—'अहो! राजा कस्यापि प्रियो न भवतीति लोकोक्तिरवितथैव ।

तथाहि—

कोऽर्थान् प्राप्य न गर्वितो? विषयिणः कस्यापदोऽस्तङ्गताः?
स्त्रीभिः कस्य न खण्डितं भुवि मनः? को नाम राज्ञां प्रियः ?
कः कालस्य न गोचरत्वमगमत् ? कोऽर्थी गतो गौरवं ?
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान्! ३७

तथाच—

काके शौचं, कामुके सत्यवाक्यं,
क्लीबे शौर्यं, मद्यपे तत्त्वचिन्ता,

सर्पे क्षान्तिः, स्त्रीषु कामोपशान्ती,
राज्ञां सख्यं केन दृष्टं श्रुतं वा ? ३८

अन्यच्च, राजा यस्मै क्रुध्यति स शुचिरप्यशुचिः । तथा चोक्तम्—

शुचिरशुचिः पटुरपटुश्शूरो भीरुश्चिरायुरल्पायुः ।
कुलजः कुलेन हीनो भवति नरो नरपतेः क्रोधात् ॥

इत्येवं पठन् शारदानन्दो वध्यस्थानं मन्त्रिणा नीयमानः श्लोकमेकमपठत् ।

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुराकृतानि ॥

तच्छ्रुत्वा मन्त्री स्वमनस्यचिन्तयत्—'अहो ! एतत् सत्यं वा मिथ्या वा, किमर्थं ब्राह्मणवधः क्रियते ? महदनुचितमिदम् ।' इति मत्वा शारदानन्दं गूढं स्वभवनं नीत्वा भूगृहे निक्षिप्य राजसन्निधिमागत्य 'देव ! अनुष्ठितो भवदादेशः ।' इत्यवादीत् । राजापि साधु कृतमिति प्रशशंस ।

अनन्तरमेकदा राजकुमार आखे (टा) टकार्थं वनं प्रति निर्जगाम । तदाऽकालवृष्ट्यादीनि दुर्निमित्तानि बभूवुः । तथा हि—

अकालवृष्टिस्त्वथ भूमिकम्पो निर्घात उल्कापतनं तथैव ।
इत्याद्यनिष्टानि ततो बभूवुर्निवारणार्थं सुहृदो वचश्च ॥४१

तस्मिन् समये मन्त्रिपुत्रो बुद्धिसागरो दुर्निमित्तानि निरूप्य शतधा निवारयामास । जयपालः—अहमवश्यं निर्ग-

च्छेयं। पश्यतु भवान् दुर्निमित्तफलम् ।' बुद्धिसागरः—नेदं परीक्षामर्हति । उक्तञ्च—

न विषं भक्षयेत् प्राज्ञो न क्रीडेत् पन्नगैस्सह ।
न निन्द्येद्योगिवृन्दं च ब्रह्मद्वेषं न कारयेत् ॥ ४२

इति तेन निवारितोऽपि तद्वचनमनादृत्य निर्गतो राजपुत्रः । निर्गच्छतेऽपि तस्मै "भो जयपाल! तव विनाशकालः समागतः । अन्यथा तवैवं विपरीता बुद्धिर्नोत्पद्येत। तथा च—

न निर्मितो वै न च दृष्टपूर्वो न श्रूयते हेममयः कुरङ्गः ।
तथाऽपि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥

उपार्जितानां कर्मणामुपभोगं विना कथं विनाशः स्यात् ? उक्तञ्च—

सद्भावो नास्ति वेश्यानां स्थिरता नास्ति सम्पदाम् ।
विवेको नास्ति मूर्खाणां विनाशो नास्ति कर्मणाम् ॥ ४४

एवमादि बहुधा निवेद्य बुद्धिसागरो विरराम ।

जयपालस्तु पुरान्निर्गत्य खड्गव्याघ्रशरभमृगकुलसङ्कुलं महदरण्यं प्रविश्य यावत् पश्चाद्ददर्श, तावत् सर्वोऽपि सैन्यवर्गः स्वनगरमार्गे लग्नः ! स्वयमेकाकी संवृत्तः तुरगमात्रसहायः पुरः सरोवरमद्राक्षीत् । तत्राश्वादवतीर्य वृक्षशाखायामश्वं निवध्य जलमवगाह्य शान्तपिपासस्तरुच्छायायां विशश्राम । तावदतिभयङ्करः कश्चिद्व्याघ्रः समापतत् । तं दृष्ट्वाऽश्वश्छिन्नबन्धो यथागतमधावत् । राजकुमारोऽपि भयाद्वेपमानाङ्गः शाखामालम्ब्य द्रुममारुरोह । तत्र पूर्वारूढं भल्लूकं दृष्ट्वा

द्विगुणं बिभ्यतं राजकुमारं भल्लूकःससान्त्वमब्रवीत् । ‘भो राजकुमार ! मा भैषीः । अद्य मां शरणं गतस्त्वम् । अतस्तवाहं किमनिष्टं करिष्यामि । मयि विश्वस्य व्याघ्रादपि न भे(त्त)तव्यम् । ’ततो राजकुमारः सभयमिदमभाणीत् । ‘भो ऋक्षराज ! अहं त्वां शरणं गतः । विशेषतो भीतश्च । महत् पुण्यं शरणागतरक्षणेन । उक्तञ्च—

एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ४५

ततो भल्लूकेन विश्वासितो राजपुत्रः । अत्रान्तरे व्याघ्रोऽपि वृक्षमूलमाजगाम । ततः सूर्योऽस्तमगात् । तावन्मृगयापरिश्रान्तो राजकुमारो निद्रापरवशो भल्लूकेनाङ्कमारोपितः सुखं सुष्वाप । तदालोक्य व्याघ्रः समवादीत्— “भल्लूक ! अयं मनुष्यो नगरनिवासी । अस्मानेव हन्तुमागतः । अतः शत्रुभूतमेनमङ्के कथं निवेशयसि ? त्वयोपकृतोऽप्यपकारमेव करिष्यति । उक्तञ्च—

मानुषेषु कृतं नास्ति तिर्यग्योनिषु यत् कृतम् ।
व्याघ्रवानरसर्पाणां भाषितं न त्वया श्रुतम् ?॥ ४६

तस्मादमुमधः पातय । अहमेनं भक्षयित्वा सुखेन गमिष्यामि । त्वमपि निजाश्रयं गच्छ । ” तच्छ्रुत्वा भल्लूकः प्राह—‘अयं कीदृशो वा भवतु । परं मां शरणं गतः । अमुं न पातयेयम् । शरणागतमारणेन महत् पातकं भवेत् । तथा च-

विश्वासघातुकाश्चैव शरणागतघातुकाः ।
वसन्ति नरके घोरे यावच्चन्द्रदिवाकरम्॥ ४७

अत्रान्तरे सुप्तोत्थितं राजकुमारं भल्लूकः प्राह—'भो राजकुमार! अहं निद्रां गमिष्यामि । त्वमत्राप्रमत्तस्तिष्ठ । राजकुमारः—'तथा भवतु । ततो भल्लूको राजपुत्रसमीपे निद्रामगमत् । तदा व्याघ्रो 'राजकुमार!' त्वमस्मिन् विश्वासं मा कुरु । यतोऽयं भल्लूकश्चञ्चलचित्तो दृश्यते । तस्मादस्य प्रसादोऽपि भयङ्करः । तथाच—

क्षणे तुष्टाः क्षणे रुष्टा वितुष्टाश्च क्षणे क्षणे ।
अव्यवस्थितचित्तानां प्रसादोऽपि भयङ्करः ॥ ४८

किं च त्वां मत्तो रक्षित्वा स्वयं हन्तुमिच्छति । अतस्त्वमेव भल्लूकमधः पातय । अहमेनं भक्षयित्वा गमिष्यामि । त्वमपि निजनगरं गन्तुमर्हसि ।'इति वञ्चयामास । तच्छ्रुत्वा राजपुत्रो यावदेनमधः पातयितुमारेभे, तावद्भल्लूको वृक्षात् पतन्नपि शाखान्तरमाललम्बे । राजपुत्रस्तु विफलप्रयत्नस्तं दृष्ट्वा बिभाय । तदा भल्लूकः 'भोः पापिष्ठ! किमर्थं बिभेषि ? यत् पुरार्जितं कर्म तत् त्वयाऽनुभोक्तव्यम् । अतस्त्वं ससेमिरेति वदन् पिशाचो भूत्वा प्रातिवनं परिभ्र' मेति शशाप । ततः प्रभातमासीत् । व्याघ्रस्तु निरगात् । भल्लूकोऽपि राजकुमारं शप्त्वा यथेच्छं जगाम । राजकुमारोऽपि ससेमिरेति प्रलपन् पिशाचो भूत्वा वनेषु तत इतः परिबभ्राम ।

ततोऽस्य तुरङ्गमो नगरमगमत् । तत्र राजपुत्ररहितमश्वं दृष्ट्वा जना राज्ञे केवलमश्वमागतमाचख्युः । ततो राजा मन्त्रिणः समाहूय भणति स्म—'भो मन्त्रिणः! मृगयार्थं कुमारे निर्गच्छति महद्दुर्निमित्तमासीत् किल । तथापि मत्तस्तदुल्लङ्घ्य वनं

गतः। तस्य फलं सद्य एव समुपनतम्। तदारूढोऽश्वः शून्यः समागतः। ततस्तन्मार्गणाय वनं प्रति गमिष्या'मीति। ततस्तेऽप्यङ्गीचक्रुः॥ ततो राजा मन्त्रिभिः परिवारेण च सह, कुमारो येन मार्गेण गतस्तेनैव मार्गेण वनं प्राविशत्। ततो वनमध्ये परिभ्रमन्तं ससेमिरेति वदन्तं पिशाचभूतं सुतं दृष्ट्वा राजा महाशोकसागरनिमग्नस्तमादाय स्वनगरमगमत्। आगत्य च तदुन्मादशमनाय बहून् विधीन् कारयामास। केनापि कुमारः स्वस्थो न बभूव। तस्मिन् समये राजा मन्त्रिणं बहुश्रुतमभाणीत्। "अस्मिन् समये शारदानन्दस्तिष्ठेद्यदि, क्षणमात्रेण चिकित्सां कुर्यात्। स मया वृथा मारितः। पुरुषेण यत् कर्म क्रियते तद्विचार्यैव कर्तव्यम्। अन्यथा परमापदां पदं भवति॥ उक्तञ्च—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥

तथा च—

अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम्।
पश्चाद्भवति सन्तापो ब्राह्मणी नकुले यथा॥ ५०

इति राज्ञश्चिन्तयतः कोऽपि चिकित्सको नासीत्। तदा मन्त्री,—"यस्य भवितव्यता यादृशी, बुद्धिरपि तादृशी भवति॥ उक्तञ्च—

तादृशी साध्यते बुद्धिः सा मतिः सा च भावना।
सहायस्तादृशो ज्ञेयो यादृशी भवितव्यता॥ ५१

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥५२

राजा—"तत् कर्मायत्तमभूत्। किमनेन गतचिन्तनेन ? इदानीं सुमहान् प्रयत्नः कर्तव्यः। मन्त्री—'कथं कर्तव्यः?' राजाऽब्रवीत्। यः कोऽपि कुमारस्य चिकित्सां करिष्यति। तस्यार्धराज्यं दास्यामि। सर्वानभीष्टान् प्रदास्यामि। इत्यभितो नगरमुद्घोषय।'इत्युक्तवति राज्ञि, मन्त्री तथैव विधाय स्वभवनमागत्य शारदानन्दाय सर्वं निवेदयामास। तत् सर्वं श्रुत्वा शारदानन्दः प्राह—"बहुश्रुत! भूपालायैवं निवेदय 'मम गृहे कापि कन्यका वर्तते। एनं यदि सा पश्येत्, कमप्युपायं करिष्यती'ति।" तच्छ्रुत्वा मन्त्री राज्ञे व्यजिज्ञपत्।

ततो राजा सपुत्रः सपरिवारो मन्त्रिमन्दिरमागत्योपविवेश। राजपुत्रोऽपि ससेमिरेति वदन्नुपविष्टः। तदाकर्ण्य यवनिकान्तर्वर्ती शारदानन्दो 'भो राजपुत्र' त्यामन्त्रयत। ससेमिरेति भूयोऽपि वदन्तं राजतनयमुद्दिश्यै(वं)नं पद्यं पपाठ—

सद्भावं प्रतिपन्नानां वञ्चने का विदग्धता।
अङ्कमारुह्य सुप्तानां हनने किं नु पौरुषम् ॥ ५३

तत्पद्यं श्रुत्वा राजपुत्रः चतुर्णां वर्णानामादिमं वर्णं परित्यज्य सेमिरेत्यपाठीत्। पुनश्च शारदानन्दो द्वितीयं पद्यमपठत्—

सेतुं दृष्ट्वा समुद्रस्य गङ्गासागरसङ्गमम्।
ब्रह्महत्या प्रमुच्येत मित्रद्रोही न मुच्यते ॥ ५४

तत्पद्यं श्रुत्वा राजपुत्रो वर्णद्वयं परित्यज्य मिरेत्युक्त-
वान्। ततस्तृतीयं पद्यमपठत्—

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातुकः।
त्रयस्ते नरकं यान्ति यावच्चन्द्रदिवाकरम्॥ ५५

राजपुत्रो रेत्यब्रवीत्। शारदानन्दश्चतुर्थं पद्यमपठत्—

राजन् भोस्तव पुत्रस्य यदि कल्याणमिच्छसि।
दानं देहि द्विजातिभ्यो वर्णानां ब्राह्मणो गुरुः॥ ५६

एवमुक्तवति शारदानन्दे स राजपुत्रः स्वस्थमनाः सा...त्
धानश्च पितुर्भल्लूकवृत्तान्तं सर्वमकथयत्। तच्छ्रुत्वा राजा शा...
दानन्दं प्रति जगाद—

ग्रामे वससि कल्याणि विपिनं नैव गच्छसि।
ऋक्षव्याघ्रमनुष्याणां कथं जानासि भाषितम्॥ ५...

इति राज्ञोक्तं श्रुत्वा शारदानन्दः प्रत्यवादीत्—

देवद्विजप्रसादेन वाणी जिह्वां ममाऽश्रिता।
तेनाहमवगच्छामि भानुमत्या यथाङ्कितम्॥ ५८

तच्छ्रुत्वा राजा महाश्चर्यभरितमना यावद्यवनिकामाक-
र्षं, तावच्छारदानन्दः साक्षाददृश्यत। तदा राजा सपुत्रः
प्रणनाम। तदा मन्त्रिणा राज्ञे पूर्ववृत्तान्ताः कथिताः। ततो राजा
बहुश्रुतं मन्त्रिणं प्रत्युवाच—तव संसर्गेणाहमकीर्तेर्निवृत्तोऽस्मि।
अतः पुरुषेण सत्सङ्गो विधेयः। तथाहि—

वारयति वर्तमानामापदमागामिनीं च सत्सङ्गः।
तृष्णां च हरति पीतं गङ्गाया दुर्गतिं च सद्योऽम्भः॥ ५...

अन्यच्च, राज्ञा तु सतां भवादृशां सङ्ग्रहः कर्तव्यः ।

कञ्च—

सङ्ग्रहं न कुलीनस्य सीदत्येव करोति यः ।
स एव श्लाघ्यते मन्त्री सम्यगारूढिको यथा ॥ ६०

इति वहुधा मन्त्रिणं स्तुत्वा वस्त्रादिना सम्भाव्य राजा ज्यमकरोत् ।

इति मन्त्री भोजराजं प्रति कथां कथयित्वा पुनरत्र-णीत् । यो राजा मन्त्रिवाक्यं शृणोति स दीर्घायुः सुखी च भवति ।

———

## ॥ अथ प्रथमोपाख्यानम् ॥

भोजे राजनि सिंहासनमारोढुं समीपमुपयाते ।
प्रतिमैका विनिवार्य प्राह गुणान् विक्रमार्कदेवस्य ॥

ततो भोजराजो मन्त्रिणं सम्भाव्य, तत्सिंहासनं स्व
राभ्यन्तरं नीत्वा, तत्र सहस्रमणिस्तम्भं मण्टपं कारयि
तस्मिन् सुमुहूर्ते सिंहासनं प्रतिष्ठाप्य, ततः पुण्यतीर्थोदकै
र्व्यौषधियुक्तैर्मन्त्रपूर्वकं द्विजैरभिषेचितः, पुरन्ध्रीभिर्नीराजि
कविभिर्विप्रैराशीर्भिरभिनन्दितो, वन्दिभिः प्रशंसितश्चातुर्व
दानमानाभ्यां सम्मान्य, दीनान्धबधिरकुब्जादिभ्यो बहूनि धन
दत्त्वा, छत्रचामराङ्कितो यावत् सिंहासनसालभञ्जिकामस्त
पदपद्मं निधायारोढुमाजगाम, तावत् सा सालभञ्जिका म
ष्यवाचा राजानमब्रवीत्—'भो महीपाल! तव विक्रमा
स्येव शौर्यौदार्यसाहसादयो यदि विद्यन्ते, तदाऽस्मिन् सिं
सने समुपवेष्टुमर्हसि ।' राजाऽब्रवीत्—'सालभञ्जिके! म
प्यौदार्यादिकमन्यूनमस्ति । ममाप्यर्थिनस्तृप्यन्ति' । तच्छ्रु
सालभञ्जिकाऽभणत्—राजन्नेतदेव तवानुचितम्, यदात्म
प्रशंससि । यः स्वगुणान् परदोषान् वा कीर्तयति, स के
दुर्जनः । सज्जनस्तु तथा न वक्ति । उक्तञ्च—

स्वगुणान् वा परदोषान् वक्तुं शक्नोति दुर्जनो लोके ।
परदोषान् वा स्वगुणान् वक्तुं शक्नोति सज्जनो नैव ॥ ६

अन्यच्च—

आयुर्वित्तं गृहच्छिद्रं मन्त्रमौषधसङ्गमौ ।
दानं मानावमानौ च नव गोप्यानि कारयेत् ॥ ६३

इति सालभञ्जिकयोक्तं निशम्य विस्मितो भोजराजस्तामवदत्—'सत्यमुक्तं त्वया । यः स्वगुणान् कीर्तयति, स मूर्खः । मया यदात्मनो गुणाः कीर्तितास्तदनुचितमेव । तिष्ठत्वेतत् । यस्यैतत्सिंहासनं तस्यौदार्यादिकं कथय । श्रोतुं वाञ्छति मे श्रोत्रम् ।' सालभञ्जिका भणति स्म । 'भो राजन्नेतत्सिंहासनं देवस्य विक्रमार्कस्य । स तु सन्तुष्टः कोटिशोऽर्थिभ्यः प्रयच्छेत् । उक्तञ्च—

निरीक्षिते सहस्रं तु नियुतं तु प्रजल्पिते ।
हसिते लक्षमाप्नोति तुष्टेऽर्थी कोटिशो नृपे ॥ ६४

किमेवंविधमौदार्यं त्वयि विद्यते ?' श्रुत्वा भोजराजस्तूष्णीं प्रत्यावर्तत ॥

इति प्रथमोपाख्यानम्

---

## ॥ अथ द्वितीयोपाख्यानम् ॥

---

चिरेण हुत्वाऽऽप्यनवाप्तकामितं
द्विजङ्गिरौ कुत्रचिदार्तचेतसम् ।
कृतार्थयामास हि विक्रमोऽचिरा-
दितीह पाञ्चालिकयाऽभिधीयते ॥ ६५

भूयोऽप्येकदा भोजराजः शुभमुहूर्ते यावद्विक्रमार्कसिंहासनमारोढुमाजगाम, तावद्द्वितीयसोपानस्था सालभञ्जिका अभणत्—'भो भोजराज ! विक्रमार्कस्यौदार्यं यदि त्वयि विद्यते तदास्मिन् सिंहासने समुपविश।' राजा—'सालभञ्जिके! तस्यौदार्यादिकं कथय।' सालभञ्जिका तु तद्वृत्तान्तं वक्तुमारेभे।

विक्रमादित्यो राज्यं कुर्वन्नेकदा चारानाहूयाब्रवीत्-'सर्वतः पृथिवीं परिभ्रमत। यत्र यत्र कौतुकप्रदं तीर्थं देवायतनमन्यानि वा तथाविधानि विलोकयथ, तन्मम निवेदयत।' चारास्तु यदाज्ञापयति देव इति निष्क्रान्ताः। अथैकदा देशान्तरं परिभ्रम्यागतः कश्चिद्दूतो राजानं प्रणम्य व्यजिज्ञपत्-"देव! चित्रकूटपर्वतनिकटतपोवनमध्ये मनोहरः कश्चिद्देवालयोऽस्ति। तत्र च पर्वते अत्युदग्राच्छिखराद्विमला कापि जलधारा पतति। तत्र स्नानमात्रेण महापातकादीन्यपि नश्यन्ति। किञ्च, यस्तु पापीयान् स्नानमाचरति तस्याङ्गादतीव कलुषमुदकं निस्सरति। तेन स पूतो भवति। अन्यच्च—तत्र कश्चिद्ब्राह्मणो महति होमकुण्डे प्रतिदिनं होमं करोति। न जाने तस्य कति वत्सरा गता इति। प्रतिदिनं कुण्डाद्बहिः प्रेरितं भस्म पर्वताकारवदस्ति। स केनापि न भाषते। एवमतिविचित्रं स्थानमद्राक्षीदयं जनः। तदुपरि देवः प्रमाण"मिति विरराम। तच्छ्रुत्वा राजा स्वयमेकाकी तेन सह तं गिरिं गत्वा परमानन्दं प्राप्य, 'अहो! पवित्रमिदं स्थानम्। अत्र साक्षाज्जगदम्बिका वसति। पश्यत एव मे मनो निर्मलं भवति किं

पुनश्चिरं निवसताम् ।' इत्युक्त्वा तत्र निर्झरे स्नात्वा देवतां प्रणम्य यत्र ब्राह्मणो होमं करोति तत्र गत्वा तमपृच्छत्! ब्राह्मणः—यदा सप्तर्षिमण्डलं रेवतीप्रथमचरणमध्यास्त, तदाऽहमयति(षि)षम् । इदानीं तदश्विनीनक्षत्रे तिष्ठति । जुह्वतो मे वर्षशतमभूत् । तथापि देवता प्रसन्ना नाभूत् ।। तच्छ्रुत्वा राजा स्वयं देवतां स्मृत्वा जुहाव । तथाऽपि देवता प्रसादं न विदधे । अनन्तरमिष्टसाहसो राजा स्वशीर्षमुत्कृत्य जुहोमीति यावत् कण्ठे खड्गं निचिक्षेप, तावद्देवता कृपाणं गृहीत्वाऽब्रवीत्—'भोः साहसिन् ! प्रसन्नाऽस्मि । वरं वृणीष्व ।' राजा—'अयं ब्राह्मणश्चिरादतिनियतो जुहोति कुतोऽस्य ममेव प्रसादं न चकर्थ?' देवता—"भो राजन्नयं चिरादनुतिष्ठत्येव । परमस्य चेतः स्वस्थं न बभूव । चञ्चलहृदयस्य तपः फलाय न कल्पते । उक्तञ्च—

अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं पर्वलङ्घनैः ।
व्यग्रचित्तेन यज्जप्तं त्रिविधं निष्फलं भवेत् ॥ ६६

तथाच—

न काष्ठे विद्यते देवो न पाषाणे न मृण्मये ।
भावे हि विद्यते देवस्तस्माद्भावो हि कारणम् ॥ ६७

किञ्च—

मन्त्रे तीर्थे द्विजे दैवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यत्र सिद्धिर्भवति तादृशी ॥ ६८

राजा—यदि प्रसन्ना जाता मम, तर्ह्यस्य ब्राह्मणस्य

मनोरथं सम्पूरय।' देवी—"भो विक्रम! महाद्रुम इव स्वदे
श्रममविगणय्य परश्रमं परिहरसि। उक्तञ्च—

छायामन्यस्य कुर्वन्ति स्वयं तिष्ठन्ति चातपे।
फलन्ति च परार्थेषु नात्महेतोर्महाद्रुमाः॥ ६

तथाच—

परोपकाराय वहन्ति निम्नगाः परोपकाराय दुहन्ति धेनवः
परोपकाराय फलन्ति भूरुहः परोपकाराय सतां विभूतयः

इति राजानं स्तुत्वा ब्राह्मणस्य मनोरथमापूर्यान्तरधात्
ततो राजा स्वनगरमगमत्।

इतीमां कथां कथयित्वा सा सालभञ्जिका भोजम
वीत्—'त्वमेतदासनमारोढुमभिलषसि। विक्रमार्कगुणा
त्वयि न दृश्यन्ते।' तच्छ्रुत्वा राजा तूष्णीं बभूव।

इति द्वितीयोपाख्यानम्

## ॥ अथ तृतीयोपाख्यानम् ॥

दत्तानि चत्वारि महार्णवेन रत्नान्यसौ विक्रमभूमिपालः।
महीसुराय प्रददावितीमां कथां तृतीया प्रतिमाऽभिधत्ते॥

पुनरपि भोजे कदाचित् सिंहासनमारोढुमागते तृतीय
सालभञ्जिकाऽवदत्—'भो राजन्! एतत्सिंहासनं तेनाध्या
सितव्यं' यस्मिन् विक्रमस्यौदार्यं विद्यते।' भोजः—'साल
भञ्जिके! तस्यौदार्यवृत्तान्तं ब्रूहि।' सालभञ्जिका—राजन्!
यदि श्रोतुं वाञ्छसि तर्हि कथयामि—

विक्रमार्कसदृशो भूमण्डले कोऽपि नास्ति । तस्य चेतस्यणुमात्रोऽपि विकल्पो नासीत् । उक्तञ्च—

अयं निजः परश्चेति विकल्पो लघुचेतसाम् ।
पुनस्तूदारचित्तानां वसुधैव कुटुम्बिनी ॥ ७२

साहसेन दीनरक्षणेन धैर्येण च तत्समो नास्ति । यतः इन्द्रादयोऽपि तं सहायमकुर्वन्त । उक्तञ्च—

उद्योगः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षडेते यस्य तिष्ठन्ति तस्य देवोऽपि शङ्कते ॥ ७३

अन्यच्च, यस्त्वतिथीनां मनोरथं पूरयति तस्येप्सितं देवः सम्पादयति । तथा चोक्तम्—

कृतो विनिश्चयः पुंसा देवः पूरयतीप्सितम् ।
विष्णुचक्रं गरुत्मांश्च नास्ति तस्य यदाहवे ॥ ७४

तथाच—

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं विषयेष्वसक्तम् ।
शूरं कृतज्ञं दृढनिश्चयं च लक्ष्मीः स्वयं वाञ्छति वासहेतोः॥

एवं सकलगुणाधिवासो विक्रमार्कः सर्वसम्पत्परिपूर्णः सकलमपि महीमण्डलं पालयन्नेकदा स्वमनस्यचिन्तयत्—

अनित्योऽयं संसारः कदा कस्य किं भविष्यतीति न ज्ञायते अतः समुपार्जितं द्रव्यं न दानभोगादिना विना सफलं भवति । तस्य सत्पात्रे दानमेव प्रथमं फलम् । यस्य तन्न भवेत् तन्नाशमेव प्राप्नुयात् । उक्तं च—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यन्न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवत्येव॥

अन्यच्च—

दातव्यं भोक्तव्यं सति विभवे सङ्ग्रहो न कर्तव्यः।
पश्येह मधुकराणां संचितमर्थं हरन्ति लोकेऽन्ये॥

किं च—

अनुभवत दत्त वित्तं मान्यं मानयत सज्जनं भजत
अतिपरुषपवनलुलिता दीपशिखेवातिचञ्चला लक्ष्मी॥

अपि च—

उपार्जितानां वित्तानां त्याग एव हि रक्षणम्।
तटाकोदरसंस्थानां परीवाह इवाम्भसाम्॥

इत्येवं विचार्य सर्वस्वदक्षिणं कमपि यज्ञं कर्तुमुपाक्र(त)त्। ततः शिल्पिभिरतिमनोहरं यज्ञायतनं कारयामास सर्वा अपि यज्ञसामग्रीः सम्पादयामास। देवर्षियक्षगन्धर्वसि दीनाह्वापयत्। ब्राह्मणाश्च समाजग्मुः। सर्वे राजानो बान्धवाश्च तत्रान्तरे राजा समुद्राह्वानाय कञ्चन ब्राह्मणं प्रैषयत्। सोऽ समुद्रतीरं गत्वा गन्धपुष्पाक्षतादिभिः समुद्रमभ्यर्च्याब्रवीत्— 'भगवन्! रत्नाकर! विक्रमार्को यज्ञं करिष्यति। तेन प्रे तोऽहं त्वदाह्वानार्थं समागतोऽस्मि इति जलमध्ये पुष्पाञ्ज विक्षिप्य क्षणं तस्थौ। तत्र न कोऽपि प्रत्युवाच। ततो ब्राह्म स्तटान्निवृत्य यथागतं यावदाजगाम, तावद्देदीप्यमानशरी कश्चिन्महीसुरः समागत्य तमवदत्—त्वं किल विक्र

णास्माना(ह्वा)ह्वयितुं प्रेषितः । तेन या सम्भावना कृता साऽस्मान् प्राप्तैव । एतदेव सुहृल्लक्षणं यत् समये दानमानादि ।
उक्तं च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते च भोजयत्येव षड्विधं मित्रलक्षणम् ॥ ८०

गिरौ मयूरो गगने च मेघो लक्षान्तरेऽर्कः सलिले च पद्मम्।
लक्षद्वये ग्लौः कुमुदानि भूमौ ययोस्तु मैत्री न तयोर्हि दूरम्॥

मम नायमवसरः समागन्तुम् । यथार्हमुपकरिष्यामि । अमूल्यानि रत्नानि चत्वारि दास्यामि । प्रयच्छ तस्मै । एषां माहात्म्यं शृणु । "एषामिदं रत्नं यद्धनादि वस्तु स्मर्यते तद्ददाति । द्वितीयं यत्तु भक्ष्यभोज्यादिकममृतकल्पं तदुत्पादयति । तृतीयं हस्त्यश्वरथपादातं बलं प्रजनयति । चतुर्थं दिव्यं वस्त्राभरणादिकं प्रसूते ।" इत्यभिधाय रत्नानि दत्त्वा समुद्रोऽन्तरधात् । तदनन्तरं ब्राह्मणस्तानि रत्नानि गृहीत्वा चिरादुज्जयिनीमगमत् ।

अत्रान्तरे यज्ञं समाप्य राजाऽवभृथस्नानं विधाय सर्वान् लोकान् परिपूर्णमनोरथानकरोत् । ब्राह्मणोऽपि राजानमवलोक्य मणीनां गुणानकथयत् । राजा—'ब्राह्मण! यज्ञदक्षिणाकालमतिलङ्घ्य समागच्छः । सर्वस्वमर्थिसात् कृत्वा केवलोऽस्मि । अतस्त्वमेवैतेषां रत्नानां यदेकं तुभ्यं रोचते तद्गृहाण ।' ब्राह्मणः—'महाराज! अहं गृहिणीं पुत्रं स्नुषां पृष्ट्वा सर्वेभ्यो यद्रोचते तद्गृह्णीयाम् ।' राजा—'तथा कुरु!'

ब्राह्मणोऽपि स्वभवनमागत्य तद्वृत्तान्तं तेषामकथयत् । तन्निश
पुत्रोऽभ्यभाषत—यद्रत्नं चतुरङ्गं बलं ददाति तद्गृह्णीयाम
सुखेन राज्यमायाति । 'पिता—प्राज्ञो राज्यं नापेक्षेत ।

रामे प्रव्रजनं बलेर्नियमनं पाण्डोस्सुतानां वनं
वृष्णीनां निधनं नले च नृपतौ राज्यात् परिभ्रंशनम्
कारागारनिषेवणं च मरणं सञ्चिन्त्य लङ्केश्वरे
दृष्ट्वा राज्यविडम्बनादुपगतं दुःखं न तद्वाञ्छति ॥

यस्माद्धनादिकं लभ्यते तद्गृह्णीयाम, तेन तु सर्वम्
लभ्यते । उक्तञ्च—

न तदस्ति जगत्यस्मिन् यदर्थेन न सिद्ध्यति ।
इति निश्चित्य मतिमान् धनमेकं प्रसाधयेत् ॥

भार्या—"यद्रत्नं षड्रसोपेतं चतुर्विधान्नं प्रसूते; तद्गृ
तव्यम् । सर्वेषां प्राणिनामन्नमेव जीवधारणम् । उक्तञ्च—

अन्नं विधात्रा विहितं मर्त्यानां जीवधारणम् ।
तदनादृत्य मतिमान् प्रार्थयेन्न तु किञ्चन ॥

अथ स्नुषा—"यद्रत्नं वस्त्राभरणादिकं प्रसूते तद्ग्राह्य
यथा च—

भूषणैर्भूषयेदङ्गं सदा विभवसारतः ।
शुचिसौभाग्यसिद्ध्यर्थमायुष्यस्याभिवृद्धये ॥

सुहृदानन्दनं मुख्यमुत्सवेषु विभूषणम् ।
रत्नाधिदेवतातुष्टिर्भूषणस्य विधारणात् ॥"

एवं परस्परं चतुर्णां विवादो लग्नः । ततो ब्राह्मणो रा

समीपमागत्य विवादं न्यवेदयत् । राजाऽपि तच्छ्रुत्वा तस्मै ब्राह्मणाय चत्वार्यपि रत्नानि ददौ ।

इति कथां कथयित्वा सालभञ्जिका भोजमब्रवीत्—
"औदार्यमेव सहजो गुणः शरीरिणाम् । तथा हि—

चम्पकेषु सुवर्णत्वं कान्तिर्मुक्ताफलेषु च ।
यथेक्षुदण्डे माधुर्यमौदार्यं सहजं तथा ॥ ८७

त्वय्येवमौदार्यं विद्यते चेदस्मिन् सिंहासन उपविश ।" तच्छ्रुत्वा राजा तूष्णीं बभूव ।

इति तृतीयोपाख्यानम्

॥ अथ चतुर्थोपाख्यानम् ॥

भूसुरेण कृतिना कृतज्ञताशोधनाय तनयो महीपतेः ।
एकदा कुहनयापहारितो गूढमित्यभिनिवेदयत्यसौ ॥ ८८

भूयोऽप्येकदा सिंहासनमारोढुमागच्छति भोजे सालभञ्जिकाऽब्रवीत्—'यदि त्वमौदार्येण विक्रमार्कमनुसरेस्तर्हीदं सिंहासनमारोह ।' राजा—'ब्रूहि मे तस्यौदार्यवृत्तान्तम् ।' ततः सालभञ्जिका कथां कथयितुमारेभे ।

विक्रमादित्ये राज्यं कुर्वत्युज्जयिन्यां ब्राह्मणः कोऽपि सकलविद्याविचक्षणः सकलगुणालङ्कृतश्च परमपुत्रः समभवत् । तं चैकदा तत्प्रेयसी जगाद—"भोः प्राणनाथ, पुत्रं विना गृहस्थस्य गतिर्नास्तीति स्मृतिपुराणविदः समामनन्ति । तथा च—

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
तस्मात् पुत्रमुखं दृष्ट्वा भवेत् पश्चाद्धि तापसः ॥ ८

शर्वरीदीपकश्चन्द्रः प्रभातोद्दीपको रविः ।
त्रैलोक्यदीपको धर्मः सुपुत्रः कुलदीपकः ॥ ९

नागो भाति मदेन ; खं जलधरैः पूर्णेन्दुना शर्वरी ;
शीलेन प्रमदा ; जवेन तुरगो ; नित्योत्सवैर्मन्दिरम् ।
वाणी व्याकरणेन ; हंसमिथुनैर्नद्यः ; सभा पण्डितैः ;
सत्पुत्रेण कुलं ; नृपेण वसुधा; लोकत्रयं भानुना ॥

तच्छ्रुत्वा भूसुरः प्राह—"प्रिये ! सत्यमवादीः । परं उद्यमेन विना द्रव्यं, गुरुशुश्रूषां विना विद्या, परमेश्वरप्रसादं विना सन्ततिश्च न लभ्यते । उक्तञ्च—

निरन्तरं सुखापेक्षा हृदये यदि वर्तते ।
कृत्वा भावं दृढं नित्यं भवानीवल्लभं भजेत् ॥ १

तदाकर्ण्य ब्राह्मणी पुनर्जगाद—'भोः स्वामिन्, जानासि किल सर्वं । कुतः परमेश्वरप्रसादनं किमपि नानुतिष्ठसि' । ब्राह्मणः—"भोः प्रिये ! युक्तमाह भवती ।

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
विदुषा तु सदा ग्राह्यं वृद्धादपि न दुर्वचः" ॥ १

इत्युक्त्वा स विप्रः परमेश्वरप्रसादनाय रुद्रानुवाकैरयजत । अथैकदा रात्रौ ब्राह्मणं स्वप्ने जटामकुटधारी वृषभवाहनः शैलतनयासमाश्लिष्टवामतनुश्चन्द्रकलावतंसः परमेश्वरश्चक्षुषोः पदमवतीर्यैवमवदत्—'पुत्र प्रदोषव्रतमाचर । तेन तव पुत्रं

भविष्यती'ति । ब्राह्मणस्तु प्रबुध्य ससम्भ्रममुत्थाय स्वप्नवृत्तान्तं वृद्धेभ्यो निवेदयामास । तेऽब्रुवन्—"तात! यथार्थोऽयं स्वप्नः । उक्तञ्च स्वप्नाध्याये—

देवो द्विजो गुरुर्वापि पितरो लिङ्गिनस्तथा ।
यद्वदन्ति वचः स्वप्ने तत् तथैव विनिर्दिशेत् ॥ १४

अस्मिन् व्रतेऽनुष्ठिते सर्वथा तव पुत्रो भविष्यती'ति । तेषां वचनं मनसि कृत्वा ब्राह्मणो मार्गशीर्षशुद्धत्रयोदश्यां मन्दवासरे कल्पोक्तप्रकारेण प्रदोषव्रतमन्वतिष्ठत् । अथानुष्ठिते च व्रते, परमेश्वरः प्रसन्नो भूत्वा पुत्रमस्मै प्रायच्छत् । तदनन्तरं ब्राह्मणस्तस्य जातकर्म विधाय द्वादशे दिवसे देवदत्त इति नाम च कृत्वावशिष्टान्यन्नप्राशनचौलोपनयनादीनि कर्माणि यथाकालमकार्षीत् । वेदान् साङ्गानध्यापयामास । ततः षोडशे वर्षे गोदानादिकं विधाय सुरूपां बुद्धिशीललक्षणसम्पन्नां कामपि कन्यकामन्विष्य तस्य विवाहं कृत्वा जीवनं परिकल्प्य स्वयं तीर्थयात्रां कर्तुकामः पुत्राय बुद्धिमेवमुपदिदेश—"पुत्र श्रूयतामुपदेशोऽयम् । इह परत्र च सुखकारी मया कथ्यते ।'देवदत्तः—आर्य! धन्योऽस्मि । यथेच्छमुपदिशतु भवान् । पिता—"वत्स! अतिकष्टां दशां प्राप्तोऽपि स्वधर्माचारं मा परित्यज । परैः सह विवादं मा कार्षीः । सर्वभूतेषु दयां कुरु । परमेश्वरे भक्तिं विधेहि । परस्त्रियो मा विलोकय । बलवद्विरोधं मा कुरु । मर्मज्ञेष्वनुवृत्तिं विधेहि । प्रस्तावसदृशं वद । स्ववित्तानुसारेण व्ययं कुरु । सज्जनानाश्रय । दुर्जनान्

परिहर । स्त्रीभ्यो गुह्यं मा वद" एवमन्याश्च नीतीरुपदिश्य स्वयं वाराणसीं जगाम । देवदत्तश्च पितुरुपदेशं पालयन् तत्रैव नगरे सुखमुवास ।

अथैकदा होमाय समिधः समाहर्तुं स महदरण्यं प्रविश्य यावत् समिधश्छिच्छेद, तावद्विक्रमो राजा मृगयार्थं विपिनमवगाह्य महान्तमेकं सूकरमनुधावन् तत्रागत्य देवदत्तं दृष्ट्वा पुरमार्गं जानन्नपि पप्रच्छ । तेन पृष्टो देवदत्तः स्वयमग्रे गच्छन् राजानं नगरमनीनयत् । तदनन्तरं राजा देवदत्तं बहुधा सम्मान्य कुत्रापि राजकार्ये न्ययुङ्क्त । एवं महान् कालः समतिचक्राम ।

अथैकदा राजा मध्येसभमवादीत् 'कथमहं देवदत्तकृतादुपकारादुत्तीर्णो भविष्यामि ? यदयं मां महतोऽरण्यान्नगरमनैषीत्' तदा कोऽपि जगाद—"हन्तायं महापुरुषः ! यत् कृतमुपकारं चिरादपि न विस्मरति । तथा चोक्तम्—

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नारिकेळा नराणाम् ।
सलिलममृतकल्पं दद्युराजीवितान्तं
न हि कृतमुपकारं साधवो विस्मरन्ति ॥ ९१

ब्राह्मणस्तु राज्ञो वचनं श्रुत्वा स्वमनसि विचचार—'अहो ! राजा किमेवं वदति? किं नामाहमुपाकरवम् ? किमेतत् तथ्यं वा मिथ्या वा ? अस्य प्रत्ययं पश्येयम् ।' इति विचार्य राजपुत्रमपहृत्य स्वमन्दिरे सङ्गोप्य तस्य कण्ठभूषणमेकं स्वभृत्यहस्ते दत्त्वा विपण्यां विक्रेतुं प्रैषयत् । अस्मिन्नवसरे

